(2) The Parasmaipada termination of the Second Person singular of the Imperative is entirely dropped.

(B) Roots ending in *consonants*:—

(1) The नु of the special base of these roots is changed to नुव् before *weak vowel* terminations.

(2) The Parasmaipada termination of the Second Person singular of the Imperative is हि.

(C) The root श्रु changes itself to शृ before नु or नो.

शक् ending in a *consonant*. | अश् ending in a *consonant*.

| Parasmaipada | | | Ātmanepada | | |
|---|---|---|---|---|---|
| | | PRESENT | | | |
| शक्नोमि | शक्नुवः | शक्नुमः | अश्नुवे | अश्नुवहे | अश्नुमहे |
| शक्नोषि | शक्नुथः | शक्नुथ | अश्नुषे | अश्नुवाथे | अश्नुध्वे |
| शक्नोति | शक्नुतः | शक्नुवन्ति | अश्नुते | अश्नुवाते | अश्नुवते |
| | | IMPERFECT | | | |
| अशक्नवम् | अशक्नुव | अशक्नुम | आश्नुवि | आश्नुवहि | आश्नुमहि |
| अशक्नोः | अशक्नुतम् | अशक्नुत | आश्नुथाः | आश्नुवाथाम् | आश्नुध्वम् |
| अशक्नोत् | अशक्नुताम् | अशक्नुवन् | आश्नुत | आश्नुवाताम् | आश्नुवत |
| | | IMPERATIVE | | | |
| शक्नवानि | शक्नवाव | शक्नवाम | अश्नवै | अश्नवावहै | अश्नवामहै |
| शक्नुहि | शक्नुतम् | शक्नुत | अश्नुष्व | अश्नुवाथाम् | अश्नुध्वम् |
| शक्नोतु | शक्नुताम् | शक्नुवन्तु | अश्नुताम् | अश्नुवाताम् | अश्नुवताम् |
| | | POTENTIAL | | | |
| शक्नुयाम् | शक्नुयाव | शक्नुयाम | अश्नुवीय | अश्नुवीवहि | अश्नुवीमहि |
| शक्नुयाः | शक्नुयातम् | शक्नुयात | अश्नुवीथाः | अश्नुवीयाथाम् | अश्नुवीध्वम् |
| शक्नुयात् | शक्नुयाताम् | शक्नुयुः | अश्नुवीत | अश्नुवीयाताम् | अश्नुवीरन् |

## चि ending in a *vowel*.

| Parasmaipada | | PRESENT | Ātmanepada | | |
|---|---|---|---|---|---|
| चिनोमि | चिनुवः / चिन्वः | चिनुमः / चिन्मः | चिन्वे | चिनुवहे / चिन्वहे | चिनुमहे / चिन्महे |
| चिनोषि | चिनुथः | चिनुथ | चिनुषे | चिन्वाथे | चिनुध्वे |
| चिनोति | चिनुतः | चिन्वन्ति | चिनुते | चिन्वाते | चिन्वते |

IMPERFECT

| | | | | | |
|---|---|---|---|---|---|
| अचिनवम् | अचिनुव / अचिन्व | अचिनुम / अचिन्म | अचिन्वि | अचिनुवहि / अचिन्वहि | अचिनुमहि / अचिन्महि |
| अचिनोः | अचिनुतम् | अचिनुत | अचिनुथाः | अचिन्वाथाम् | अचिनुध्वम् |
| अचिनोत् | अचिनुताम् | अचिन्वन् | अचिनुत | अचिन्वाताम् | अचिन्वत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| चिनवानि | चिनवाव | चिनवाम | चिनवै | चिनवावहै | चिनवामहै |
| चिनु | चिनुतम् | चिनुत | चिनुष्व | चिन्वाथाम् | चिनुध्वम् |
| चिनोतु | चिनुताम् | चिन्वन्तु | चिनुताम् | चिन्वाताम् | चिन्वताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| चिनुयाम् | चिनुयाव | चिनुयाम | चिन्वीय | चिन्वीवहि | चिन्वीमहि |
| चिनुयाः | चिनुयातम् | चिनुयात | चिन्वीथाः | चिन्वीयाथाम् | चिन्वीध्वम् |
| चिनुयात् | चिनुयाताम् | चिनुयुः | चिन्वीत | चिन्वीयाताम् | चिन्वीरन् |

## वृ ending in a *vowel*.

| Parasmaipada | | PRESENT | Ātmanepada | | |
|---|---|---|---|---|---|
| वृणोमि | वृणुवः / वृण्वः | वृणुमः / वृण्मः | वृण्वे | वृणुवहे / वृण्वहे | वृणुमहे / वृण्महे |
| वृणोषि | वृणुथः | वृणुथ | वृणुषे | वृण्वाथे | वृणुध्वे |
| वृणोति | वृणुतः | वृण्वन्ति | वृणुते | वृण्वाते | वृण्वते |

| Parasmaipada | IMPERFECT | | Ātmanepada | | |
|---|---|---|---|---|---|
| अवृणवम् | अवृणुव / अवृण्व | अवृणुम / अवृण्म | अवृण्वि | अवृणुवहि / अवृण्वहि | अवृणुमहि / अवृण्महि |
| अवृणोः | अवृणुतम् | अवृणुत | अवृणुथाः | अवृण्वाथाम् | अवृणुध्वम् |
| अवृणोत् | अवृणुताम् | अवृण्वन् | अवृणुत | अवृण्वाताम् | अवृण्वत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| वृणवानि | वृणवाव | वृणवाम | वृणवै | वृणवावहै | वृणवामहै |
| वृणु | वृणुतम् | वृणुत | वृणुष्व | वृण्वाथाम् | वृणुध्वम् |
| वृणोतु | वृणुताम् | वृण्वन्तु | वृणुताम् | वृण्वाताम् | वृण्वताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| वृणुयाम् | वृणुयाव | वृणुयाम | वृण्वीय | वृण्वीवहि | वृण्वीमहि |
| वृणुयाः | वृणुयातम् | वृणुयात | वृण्वीथाः | वृण्वीयाथाम् | वृण्वीध्वम् |
| वृणुयात् | वृणुयाताम् | वृणुयुः | वृण्वीत | वृण्वीयाताम् | वृण्वीरन् |

## The Present Participles Active :—

The Present Participles Active of the roots of the Fifth Conjugation are formed and declined like those of the roots of the Eighth Conjugation.

E. g. चि — चिन्वत्, चिन्वान; शक् — शक्नुवत्;

अश् — अश्नुवान; वृ — वृण्वत्, वृण्वान.

| | | | | | | |
|---|---|---|---|---|---|---|
| P. P. चिन्वत् | (*m.*) | N. | चिन्वन् | चिन्वन्तौ | चिन्वन्तः | etc. |
| | (*f.*) | N. | चिन्वती | चिन्वत्यौ | चिन्वत्यः | ,, |
| | (*n.*) | N. | चिन्वत्-द् | चिन्वती | चिन्वन्ति | ,, |
| A. P. चिन्वान | (*m.*) | N. | चिन्वानः | चिन्वानौ | चिन्वानाः | ,, |
| | (*f.*) | N. | चिन्वाना | चिन्वाने | चिन्वानाः | ,, |
| | (*n.*) | N. | चिन्वानम् | चिन्वाने | चिन्वानानि | ,, |

LANGUAGE-STUDY :—

Study the different uses of यावत्–तावत् as illustrated in the following examples.

( 1 ) यावत्–तावत् is equivalent to '*before*' used with reference to a future event. [ It is usually accompanied by the negative Particle न when used in this sense. ]

यावदेव गर्भदास्याः सुता नागच्छति, तावदेव त्वमपि तूष्णीको भूत्वोपसर्प ।

Trans. :—Quietly approach her *before* this vile girl comes.

( 2 ) It is equivalent to '*all*', '*everything*'.

यावच्छक्यं तावद्यते ।

Trans. :—I will do *all* that is Possible.

( 3 ) It is equivalent to '*as long as*', '*so long as*', '*till*'.

यावद्यमन्तरीक्षमुत्पतितुमक्षमस्तावदत्रैव तरुकोटरे जीवितं धारयतु ।

( कादम्बरी )

Trans.:—Let him live here in some hollow of the tree *as long as* he is not able to fly up into the sky.

( 4 ) It is equivalent to '*no sooner......than*', '*as soon as,*' '*scarcely......when*'.

तौ तं प्रति प्रचलितौ यावत्, तावत्तेन शृगालसुतेनाभिहितम् । ( पञ्चतन्त्रम् )

Trans.:—*No sooner* did those two advance towards him, *than* the young one of the fox said.

( 5 ) It is equivalent to '*when*', '*while*'.

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ( कुमारसम्भवम् )

Trans.:—*While* the voices of the gods saying, " O Lord, do restrain your anger ", were pervading the skies, the fire produced in the eye of Śiva reduced Madana to ashes.

( 6 ) यावत् and तावत् may also be used as Pronominal Adjectives and in such combinations as are shown in the above

sentences to give the sense of '*as many......as*', '*as much...* *...as*', '*as long......as*', *or* '*as far......as*'.

यावन्ति मम नामधेयस्याक्षराणि तावन्ति दिनानि प्रतीक्षस्व ।

Trans:—Wait for *as many* days *as* there are letters in my name.

यावानवकाशस्तावान् प्रयत्नः ।

Trans.:—Efforts (of human beings) extend *so far as* there is scope (or time).

ADDITIONAL EXERCISES:—

## निरपेक्षो न कर्तव्यो भृत्यैः स्वामी कदाचन ।

अस्त्युत्तरापथेऽर्बुदशिखरनाम्नि पर्वते महाविक्रमो नाम सिंहः । अस्य पर्वत-कन्दरमधिशयानस्य केसराग्रं कश्चिन्मूषिकः प्रत्यहं कृन्तति । ततः केसराग्रं लूनं दृष्ट्वा कुपितो विवरान्तर्गतं मूषकमलभमानोऽचिन्तयत् —

"क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्नैव लभ्यते ।
तमाहन्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥"

इत्यालोच्य तेन ग्रामं गत्वा, विश्वासं कृत्वा, दधिकर्णनामा बिडालो यत्नेनानीय, मांसाहारं दत्वा, स्वकन्दरे स्थापितः । तद्भयान्मूषकोऽपि बिलान्निष्क्रमितुं न शक्नोति । तेनासौ सिंहः सुखेन निद्रां लभते । मूषिकशब्दं यदा यदा शृणोति, तदा तदा सविशेषमांसाहारदानेन तं बिडालं संवर्धयति ।

अथैकदा स मूषिकः क्षुधापीडितो बहिः सञ्चरन् बिडालेन प्राप्तो व्यापादितश्च । अनन्तरं स सिंहो यदा कदाचिदपि तस्य मूषिकस्य शब्दं विवरान्नाशृणोत् तदोपयोगाभावाद् बिडालस्याप्याहारदाने मन्दादरोऽभवत् । ततोऽसावाहारविरहाद् दुर्बलो दधिकर्णोऽवसन्नोऽभवत् ।

—हितोपदेशः

TRANSLATE:—

All at once there arose in the forest a great hue and cry which pervaded the whole forest. Hearing that I covered my-

1. Northern India; 2. Sleeping; 3. To cut; 4. A cat; 5. Dead.

self up with the wing of my father who was near by. After some time the noise subsided. My fear too subsided along with it; and remaining within the hollow, I cast my eyes in that direction.

There stood a huge army before me. In the midst of that huge army of hunters, I saw their chief. He was young in age. His body seemed as if made of iron. All about him there were packs of hounds which were wagging their tails. The hunters had surrounded him on all sides. Such was his form that no one would dare even to approach him. Even a sight of him would cause pain to the hearts of his enemies. His name was Mātaṅgaka. This I heard later on.

New Words :—अकाण्ड एव; कोलाहलः; उद् + चर्; अश्; समीपवर्तिन्; आ + वृ; शम्; कोटरस्थ; प्र + हि; शबर; सैन्य; आयस; समन्तात्; कौलेयकः; गणः; लाङ्गूलम्; परिवृत; धृष्; दु; पश्चात्.

HOME-WORK :—

I. Use the following words in sentences of your own :—
सकाशम्; विना; यथा–तथा; न प्रयोजनम्; धिक्; स्थाने; सदृश.

II. Recognize the following forms :—
गृहीत्वा; आकुलीकृता; पिधाय; समापतन्तः; आसितुम्.

III. Conjugate the following roots fully :—
आप्; श्रु.

IV. लज्जया सहितं यथा स्यात् तथा—सलज्जम् ।

Dissolve the following compounds as indicated above.
सभयम्, सरोषम्,ससाध्वसम्, सस्पृहम्.

# अष्टमः पाठः

## न मुच्यते ।

भीमसेनः—भोः पुरुष, मुच्यताम् ।

घटोत्कचः—न मुच्यते । मातुराज्ञया गृहीतो ह्येषः ।

भीम०—(आत्मगतम्) कथं मातुराज्ञेति । अहो गुरुशुश्रूषुः खल्वयं तपस्वी । (प्रकाशम्) भोः पुरुष, प्रष्टव्यं खलु तावदस्ति ।

घटो०—वद शीघ्रम् ।

भीम०—का नाम भवतो माता ?

घटो०—श्रूयताम् । हिडिम्बा नाम राक्षसी ।

भीम०—(आत्मगतम्) एवं हिडिम्बायाः पुत्रोऽयम् । सदृशो ह्यस्य गर्वः । (प्रकाशम्) भोः पुरुष, मुच्यताम् ।

घटो०—न मुच्यते ।

भीम०—भो ब्राह्मण, गृह्यतां तव पुत्रः । अहमेनमनुगच्छामि । क्षत्रियकुलोत्पन्नोऽहम् । मम शरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

घटो०—एवं क्षत्रियोऽयम् । तेन गर्वः । भवतु । इममेव हत्वा नयामि । अथ केनायं निवारितः ?

भीम०—मया ।

घटो०—भवानेवागच्छतु ।

भीम०—यदि ते शक्तिरस्ति बलात्कारेण मां नय ।

घटो०—किं मां प्रत्यभिजानीते भवान् ?

भीम०—मम पुत्र इति जाने ।

घटो०—कथं कथं तव पुत्रोऽहम् !

भीम०—कथं रुष्यति ! मर्षयतु मर्षयतु भवान् । सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाहूयन्ते । अत एव मयाभिहितम् ।

घटो०—भीतानामायुधं गृहीतम्।

भीम०—शपामि सत्येन भयं न जाने।

घटो०—एष ते भयमुपदिशामि। गृहाणायुधम्।

भीम०—आयुधमिति। गृहीतमेतत्।

घटो०—कथमिव।

भीम०—काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः।
अयं तु दक्षिणो बाहुरायुधं सदृशं मम॥ १॥

घटो०—इदमुपपन्नं पितुर्मे भीमसेनस्य।

भीम०—अथ कोऽयम् भीमः?
विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः।
एतेषु कथ्यतां भद्र केन ते सदृशः पिता॥ २॥

घटो०—सर्वैः।

भीम०—धिगनृतमेतत्।

घटो०—कथं कथमनृतम्! क्षिपति मे गुरुम्। भवतु। इमं स्थूलं वृक्षमुत्पाट्य प्रहरामि। कथमनेनापि न शक्यते हन्तुम्! भवतु दृष्टम्। एतद्गिरिकूटमुत्पाट्य प्रहरामि। कथमनेनापि न शक्यते हन्तुम्! भवतु दृष्टम्। अस्ति मातृप्रसादलब्धो मायापाशः। तेन बद्ध्वैनं नयामि। (मन्त्रं जपति) भोः पुरुष,

मायापाशेन बध्नामि विवशो न हि गच्छसि।
राजसे रज्जुभिर्बद्धः शक्रध्वज इवोत्सवे॥ ३॥

(इति मायया बध्नाति।)

भीम०—अस्ति महेश्वरप्रसादलब्धो मायापाशमोक्षो मन्त्रः। तं जपामि। (मन्त्रं जपति)

घटो०—अये पतितः पाशः! भवतु। भोः पुरुष, पूर्वसमयं स्मर।

भीम०—समय इति। एष स्मरामि। गच्छाग्रतः। (उभौ परिक्रामतः।)

घटो०—तिष्ठ तावत्। तवागमनमम्बायै निवेदयामि।

भीम०—बाढम्। गच्छ।

घटो०—( उपसृत्य ) अम्ब, अभिवादये घटोत्कचोऽहम्। चिराभिलषितो भवत्या आहारार्थमानीतो मानुषः।

हिडिम्बा—( प्रविश्य ) जात, चिरं जीव। कीदृशो मानुष आनीतः?

घटो०—भवति, वाङ्मात्रेण मानुषो न वीर्येण।

हिडिम्बा—यद्येवं पश्यामि तावदेनम्। ( उभौ परिक्रामतः। ) किमेष मानुष आनीतः?

घटो०—भवति, कोऽयम्?

हिडिम्बा—उन्मत्तक, दैवतं खल्वयम्।

घटो०—आः कस्य दैवतम्?

हिडिम्बा—तव च मम च।

घटो०—कः प्रत्ययः?

हिडिम्बा—एष प्रत्ययः। जयत्वार्यपुत्रः।

—मध्यमव्यायोगः

## VOCABULARY

**अनृतम्** ( *n.* ) A lie; a falsehood.

**अभिहित** ( *pp. pass.* ) Said.

**उत्पाट्य** ( *Ger.* ) Having uprooted.

**उन्मत्तक** ( *Adj.* ) Intoxicated.

**उपपन्न** ( *pp. pass.* ) Fit; proper.

**क्षिप्** [ 6. P.P. क्षिपति ] 1. To throw. 2. To abuse; to censure.

**गिरिकूटम्** ( *n.* ) The peak of a mountain.

**गुरुशुश्रूषु** ( *Adj.* ) One desirous of serving the elders.

**गृहीत** ( *pp. pass.* ) Seized; caught.

**चिराभिलषित** ( *pp. pass.* ) Desired for a long time.

**तपस्विन्** ( *Adj.* ) 1. One who performs penance; 2. A poor fellow. [A term expressive of pity or compassion. ]

**दक्षिण** ( *Adj.* ) Right.

**दैवतम्** ( *n.* ) A deity.

**निवारित** ( *pp. pass.* ) Stopped.

प्रति + अभि + ज्ञा [ 9. U. P. प्रत्यभिजानाति–जानीते ] To know; to understand; to recognize.

प्रष्टव्य ( *pot. pass. p.* ) Fit to be asked.

बाढम् ( *Indecl.* ) Yes; all right.

मानुषः ( *m.* ) A man.

मायापाशः ( *m.* ) A magical spell or charm.

मायापाशमोक्ष ( *Adj.* ) That which frees from a magical spell.

मृष् [ 10. U. P. मर्षयति-ते ] To bear; to forgive.

रज्जुः ( *f.* ) A rope.

रुष् [ 4. P. P. रुष्यति ] To be angry.

वाङ्मात्रेण ( *Indecl.* ) Only in words ( not in fact ).

विनिमातुम् ( *Inf.* ) In Order to exchange.

विवश ( *Adj.* ) Helpless.

शक्रध्वजः ( *m.* ) The banner of Indra.

शप् [ 1. U. P. शपति-ते ] To swear; to curse.

समयः ( *m.* ) 1. An agreement. 2. Time.

हत्वा ( *Ger.* ) Having killed.

GRAMMAR :—

**Conjugation of verbs : Ninth Conjugation.**

The following roots of the *Ninth Conjugation* are of frequent occurrence :—

अश् [ P. P. अश्नाति ] To eat.

कॄ [ U. P. कृणाति- कृणीते ] To cut.

क्री [ U. P. क्रीणाति-क्रीणीते ] To buy.

क्लिश् [ P. P. क्लिश्नाति ] To trouble; to give pain.

क्षुभ् [ P. P. क्षुभ्नाति ] To be agitated.

गॄ [ P. P. गृणाति ] To praise.

ग्रन्थ् [ P. P. ग्रथ्नाति ] To string together.

ग्रह् [ U. P. गृह्णाति-गृह्णीते ] To take.

जॄ [ P. P. जृणाति ] To get old.

ज्ञा [ U. P. जानाति-जानीते ] To know.

दॄ [ P. P. दृणाति ] To tear.

धू [ U. P. धुनाति-धुनीते ] To shake.

पुष् [ P. P. पुष्णाति ] To nourish.

पू [ U. P. पुनाति-पुनीते ] To purify.

पॄ [ P. P. पृणाति ] To fill.

प्री [ U. P. प्रीणाति-प्रीणीते ] To please.
बन्ध् [ P. P. बध्नाति ] To tie.
मन्थ् [ P. P. मथ्नाति ] To churn.
मुष् [ P. P. मुष्णाति ] To steal.
मृद् [ P. P. मृद्नाति ] To pound.
ली [ P. P. लिनाति ] To melt.
लू [ U. P. लुनाति-लुनीते ] To cut.
वॄ [ U. P. वृणाति-वृणीते ] To choose.
शॄ [ P. P. शृणाति ] To drop.
स्तम्भ् [ P. P. स्तभ्नाति ] 1. To stop; 2. To be proud.
स्तॄ [ U. P. स्तृणाति-स्तृणीते ] To spread; to scatter.

**Formation of the bases :—**

*The sign of the Conjugation is* **नी.**

The special *weak* base of the roots of the Ninth Conjugation is formed by the addition of नी to the roots and the special *strong* base is formed by changing this नी to ना.

**Special rules :—**

( A ) The ई of नी is dropped before all *weak* vowel terminations.

( B ) In the case of the roots ending in *consonants* :—

( 1 ) The penultimate nasal, if any, is dropped before नी or ना.

( 2 ) The Parasmaipada termination of the Second Person singular of the Imperative is आन and is applied to the root itself without the sign नी and after dropping the penultimate nasal, if any.

( 3 ) ग्रह् becomes गृह् in forming the special base.

( C ) In the case of the roots ending in *vowels* :—

( 1 ) The Parasmaipada termination of the Second Person singular of the Imperative is हि.

( 2 ) The roots धू, पू, ली, लू and those ending in ॠ ( long ) shorten their final vowel before नी and ना.

( 3 ) The root ज्ञा becomes जा in forming the special base.

प्री ending in a *vowel.*

| Parasmaipada | | PRESENT | | Ātmanepada | |
|---|---|---|---|---|---|
| प्रीणामि | प्रीणीवः | प्रीणीमः | प्रीणे | प्रीणीवहे | प्रीणीमहे |
| प्रीणासि | प्रीणीथः | प्रीणीथ | प्रीणीषे | प्रीणाथे | प्रीणीध्वे |
| प्रीणाति | प्रीणीतः | प्रीणन्ति | प्रीणीते | प्रीणाते | प्रीणते |
| | | IMPERFECT | | | |
| अप्रीणाम् | अप्रीणीव | अप्रीणीम | अप्रीणि | अप्रीणीवहि | अप्रीणीमहि |
| अप्रीणाः | अप्रीणीतम् | अप्रीणीत | अप्रीणीथाः | अप्रीणाथाम् | अप्रीणीध्वम् |
| अप्रीणात् | अप्रीणीताम् | अप्रीणन् | अप्रीणीत | अप्रीणाताम् | अप्रीणत |
| | | IMPERATIVE | | | |
| प्रीणानि | प्रीणाव | प्रीणाम | प्रीणै | प्रीणावहै | प्रीणामहै |
| प्रीणीहि | प्रीणीतम् | प्रीणीत | प्रीणीष्व | प्रीणाथाम् | प्रीणीध्वम् |
| प्रीणातु | प्रीणीताम् | प्रीणन्तु | प्रीणीताम् | प्रीणाताम् | प्रीणताम् |
| | | POTENTIAL | | | |
| प्रीणीयाम् | प्रीणीयाव | प्रीणीयाम | प्रीणीय | प्रीणीवहि | प्रीणीमहि |
| प्रीणीयाः | प्रीणीयातम् | प्रीणीयात | प्रीणीथाः | प्रीणीयाथाम् | प्रीणीध्वम् |
| प्रीणीयात् | प्रीणीयाताम् | प्रीणीयुः | प्रीणीत | प्रीणीयाताम् | प्रीणीरन् |

पू ending in a *vowel.*

| Parasmaipada | | PRESENT | | Ātmanepada | |
|---|---|---|---|---|---|
| पुनामि | पुनीवः | पुनीमः | पुने | पुनीवहे | पुनीमहे |
| पुनासि | पुनीथः | पुनीथ | पुनीषे | पुनाथे | पुनीध्वे |
| पुनाति | पुनीतः | पुनन्ति | पुनीते | पुनाते | पुनते |

Parasmaipada IMPERFECT Ātmanepada

| | | | | | |
|---|---|---|---|---|---|
| अपुनाम् | अपुनीव | अपुनीम | अपुनि | अपुनीवहि | अपुनीमहि |
| अपुनाः | अपुनीतम् | अपुनीत | अपुनीथाः | अपुनाथाम् | अपुनीध्वम् |
| अपुनात् | अपुनीताम् | अपुनन् | अपुनीत | अपुनाताम् | अपुनत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| पुनानि | पुनाव | पुनाम | पुनै | पुनावहै | पुनामहै |
| पुनीहि | पुनीतम् | पुनीत | पुनीष्व | पुनाथाम् | पुनीध्वम् |
| पुनातु | पुनीताम् | पुनन्तु | पुनीताम् | पुनाताम् | पुनताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| पुनीयाम् | पुनीयाव | पुनीयाम | पुनीय | पुनीवहि | पुनीमहि |
| पुनीयाः | पुनीयातम् | पुनीयात | पुनीथाः | पुनीयाथाम् | पुनीध्वम् |
| पुनीयात् | पुनीयाताम् | पुनीयुः | पुनीत | पुनीयाताम् | पुनीरन् |

वृ ending in a *vowel*.

Parasmaipada PRESENT Ātmanepada

| | | | | | |
|---|---|---|---|---|---|
| वृणामि | वृणीवः | वृणीमः | वृणे | वृणीवहे | वृणीमहे |
| वृणासि | वृणीथः | वृणीथ | वृणीषे | वृणाथे | वृणीध्वे |
| वृणाति | वृणीतः | वृणन्ति | वृणीते | वृणाते | वृणते |

IMPERFECT

| | | | | | |
|---|---|---|---|---|---|
| अवृणाम् | अवृणीव | अवृणीम | अवृणि | अवृणीवहि | अवृणीमहि |
| अवृणाः | अवृणीतम् | अवृणीत | अवृणीथाः | अवृणाथाम् | अवृणीध्वम् |
| अवृणात् | अवृणीताम् | अवृणन् | अवृणीत | अवृणाताम् | अवृणत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| वृणानि | वृणाव | वृणाम | वृणै | वृणावहै | वृणामहै |
| वृणीहि | वृणीतम् | वृणीत | वृणीष्व | वृणाथाम् | वृणीध्वम् |
| वृणातु | वृणीताम् | वृणन्तु | वृणीताम् | वृणाताम् | वृणताम् |

| Parasmaipada | | POTENTIAL | Ātmanepada | | |
|---|---|---|---|---|---|
| वृणीयाम् | वृणीयाव | वृणीयाम | वृणीय | वृणीवहि | वृणीमहि |
| वृणीयाः | वृणीयातम् | वृणीयात | वृणीथाः | वृणीयाथाम् | वृणीध्वम् |
| वृणीयात् | वृणीयाताम् | वृणीयुः | वृणीत | वृणीयाताम् | वृणीरन् |

ज्ञा ending in a *vowel.*

| Parasmaipada | | PRESENT | Ātmanepada | | |
|---|---|---|---|---|---|
| जानामि | जानीवः | जानीमः | जाने | जानीवहे | जानीमहे |
| जानासि | जानीथः | जानीथ | जानीषे | जानाथे | जानीध्वे |
| जानाति | जानीतः | जानन्ति | जानीते | जानाते | जानते |
| | | IMPERFECT | | | |
| अजानाम् | अजानीव | अजानीम | अजानि | अजानीवहि | अजानीमहि |
| अजानाः | अजानीतम् | अजानीत | अजानीथाः | अजानाथाम् | अजानीध्वम् |
| अजानात् | अजानीताम् | अजानन् | अजानीत | अजानाताम् | अजानत |
| | | IMPERATIVE | | | |
| जानानि | जानाव | जानाम | जानै | जानावहै | जानामहै |
| जानीहि | जानीतम् | जानीत | जानीष्व | जानाथाम् | जानीध्वम् |
| जानातु | जानीताम् | जानन्तु | जानीताम् | जानाताम् | जानताम् |
| | | POTENTIAL | | | |
| जानीयाम् | जानीयाव | जानीयाम | जानीय | जानीवहि | जानीमहि |
| जानीयाः | जानीयातम् | जानीयात | जानीथाः | जानीयाथाम् | जानीध्वम् |
| जानीयात् | जानीयाताम् | जानीयुः | जानीत | जानीयाताम् | जानीरन् |

ग्रह् ending in a *connsoant.*

| Parasmaipada | | PRESENT | Ātmanepada | | |
|---|---|---|---|---|---|
| गृह्णामि | गृह्णीवः | गृह्णीमः | गृह्णे | गृह्णीवहे | गृह्णीमहे |
| गृह्णासि | गृह्णीथः | गृह्णीथ | गृह्णीषे | गृह्णाथे | गृह्णीध्वे |
| गृह्णाति | गृह्णीतः | गृह्णन्ति | गृह्णीते | गृह्णाते | गृह्णते |

| Parasmaipada | | IMPERFECT | Ātmanepada | | |
|---|---|---|---|---|---|
| अगृह्णाम् | अगृह्णीव | अगृह्णीम | अगृह्णि | अगृह्णीवहि | अगृह्णीमहि |
| अगृह्णाः | अगृह्णीतम् | अगृह्णीत | अगृह्णीथाः | अगृह्णाथाम् | अगृह्णीध्वम् |
| अगृह्णात् | अगृह्णीताम् | अगृह्णन् | अगृह्णीत | अगृह्णाताम् | अगृह्णत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| गृह्णानि | गृह्णाव | गृह्णाम | गृह्णै | गृह्णावहै | गृह्णामहै |
| गृहाण | गृह्णीतम् | गृह्णीत | गृह्णीष्व | गृह्णाथाम् | गृह्णीध्वम् |
| गृह्णातु | गृह्णीताम् | गृह्णन्तु | गृह्णीताम् | गृह्णाताम् | गृह्णताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| गृह्णीयाम् | गृह्णीयाव | गृह्णीयाम | गृह्णीय | गृह्णीवहि | गृह्णीमहि |
| गृह्णीयाः | गृह्णीयातम् | गृह्णीयात | गृह्णीथाः | गृह्णीयाथाम् | गृह्णीध्वम् |
| गृह्णीयात् | गृह्णीयाताम् | गृह्णीयुः | गृह्णीत | गृह्णीयाताम् | गृह्णीरन् |

बन्ध् ending in a *consonant.* मुष् ending in a *consonant.*

| Parasmaipada | | PRESENT | Parasmaipada | | |
|---|---|---|---|---|---|
| बध्नामि | बध्नीवः | बध्नीमः | मुष्णामि | मुष्णीवः | मुष्णीमः |
| बध्नासि | बध्नीथः | बध्नीथ | मुष्णासि | मुष्णीथः | मुष्णीथ |
| बध्नाति | बध्नीतः | बध्नन्ति | मुष्णाति | मुष्णीतः | मुष्णन्ति |

IMPERFECT

| | | | | | |
|---|---|---|---|---|---|
| अबध्नाम् | अबध्नीव | अबध्नीम | अमुष्णाम् | अमुष्णीव | अमुष्णीम |
| अबध्नाः | अबध्नीतम् | अबध्नीत | अमुष्णाः | अमुष्णीतम् | अमुष्णीत |
| अबध्नात् | अबध्नीताम् | अबध्नन् | अमुष्णात् | अमुष्णीताम् | अमुष्णन् |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| बध्नानि | बध्नाव | बध्नाम | मुष्णानि | मुष्णाव | मुष्णाम |
| बधान | बध्नीतम् | बध्नीत | मुषाण | मुष्णीतम् | मुष्णीत |
| बध्नातु | बध्नीताम् | बध्नन्तु | मुष्णातु | मुष्णीताम् | मुष्णन्तु |

| Parasmaipada | POTENTIAL | Parasmaipada | | | |
|---|---|---|---|---|---|
| बध्नीयाम् | बध्नीयाव | बध्नीयाम | मुष्णीयाम् | मुष्णीयाव | मुष्णीयाम |
| बध्नीयाः | बध्नीयातम् | बध्नीयात | मुष्णीयाः | मुष्णीयातम् | मुष्णीयात |
| बध्नीयात् | बध्नीयाताम् | बध्नीयुः | मुष्णीयात् | मुष्णीयाताम् | मुष्णीयुः |

**Present Participles Active :—**

The Present Participles Active of the roots of the Ninth Conjugation are formed and declined like those of the roots of the Fifth and the Eighth Conjugation.

E. g. प्री – प्रीणत् – प्रीणान; वृ – वृणत् – वृणान;
पू – पुनत् – पुनान ; ज्ञा – जानत् – जानान;
ग्रह् – गृह्णत् – गृह्णान; मुष् – मुष्णत्; बन्ध् – बध्नत्.

(*m.*) – N. प्रीणन् प्रीणन्तौ प्रीणन्तः etc.
(*f.*) – N. प्रीणती प्रीणत्यौ प्रीणत्यः ,,
(*n.*) – N. प्रीणत्-द् प्रीणती प्रीणन्ति ,,

LANGUAGE-STUDY :—

Study carefully the following special uses of the *Instrumental case* :—

(1) The Instrumental is used to indicate the *motive* with which a thing is done.

अध्ययनेनागतोऽस्मि ।

Trans.:—I have come with the intention of studying.

(2) When an action is such that it is completed within a certain period, or that it can be accomplished in a certain period or that it is to take place after the expiry of a certain period, the word denoting the period is put in the Instrumental case. But when the action spreads over a period the Accusative case of the word denoting the period is used.

क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा । ( महाभारतम् )

Trans.:—In a moment the whole of that forest became quiet.

द्वादशवर्षैर्व्याकरणं श्रूयते । ( पञ्चतन्त्रम् )

Trans.:—Grammar is studied in twelve years.

राजसूये संवत्सरेणोपावर्तनीयस्तुरगो विसृज्यते ।

Trans.:—In the Rājasūya sacrifice a horse that is to return at the end of one year is let lose.

But,

द्वादशवर्षाणि तदा नहि वर्षति वासवो भूमौ । ( पञ्चतन्त्रम् )

(3) When something is sworn, the thing by which a person swears is put in the Instrumental case.

शपामि सत्येन भयं न जाने । ( मध्यमव्यायोगः )

Trans.:—In the name of truth I swear that I do not know what fear is.

(4) When a thing is exchanged for another, the thing which is given in exchange for the other is put in the Instrumental case. Similarly the price at which a thing is bought is also put in the Instrumental case.

मम शरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि । ( मध्यमव्यायोगः )

Trans :—I wish to give my body in exchange for the Brahmin's body.

आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ । ( पञ्चतन्त्रम् )

Trans. :—Give your body to the master in return for twice that as profit.

(5) Words expressive of similarity govern the Instrumental case, and whenever resemblance is indicated, the point with regard to which resemblance exists is put in the Instrumental case. But sometimes the Locative also is used in this context.

केन सदृशस्ते पिता । ( मध्यमव्यायोगः )

Trans.:—Whom does your father resemble ?

औदार्येण —औदार्ये वा पितरमनुकरोति ।

Trans.:—He is like his father so far as generosity is concerned.

(6) When excellence is spoken of, the point with regard to which excellence exists is put in the Instrumental case

पूर्वान् महाभाग ( भक्त्या ) तयातिशेषे । ( रघुवंशम् )

Trans.:—O fortunate one, you excel your ancestors so far as devotion is concerned.

(7) Whenever a particular condition or state is inferred from a particular mark or symbol, the mark or the symbol is put in the Instrumental case.

कमण्डलूपवीतादिभिर्ब्राह्मणः । ( भोजप्रबन्धः)

Trans.:—He must be a Brahmin because he has a pot and a sacred thread.

ADDITIONAL EXERCISES :—

नीतिरत्नानि ।

हर्तुर्याति न गोचरं, किमपि शं पुष्णाति यत्सर्वदा,
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ?
राजन् दुधुक्षसि यदि क्षितिधेनुमेतां,
तेनाद्य वत्समिव लोकममुं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः ॥

1. Happiness; 2. Always; 3. Hidden or internal wealth; 4. To be desirous of milking; 5. Well.

यद् धात्रा निजभालपट्टलिखितं स्तोकं[1] महद् वा धनं,
तत् प्राप्नोति मरुस्थलेऽपि[2] नितरां, मेरौ ततो नाधिकम्।
तद् धीरो भव, वित्तवत्सु कृपणां[3] वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम्॥
प्रीणाति यः सुचरितैः पितरं स पुत्रो,
यद् भर्तुरेव हितमिच्छति तत् कलत्रम्।
तन्मित्रमापदि सुखे च समक्रियं[4] य-
देतत् त्रयं जगति पुण्यकृतो लभन्ते॥
कान्ता-कटाक्ष-विशिखा[5] न लुनन्ति यस्य
चित्तं न निर्दहति कोप-कृशानु[6]-तापः।
कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं[7] स धीरः॥

—नीतिशतकम्

TRANSLATE :—

Damayantī said to her maid, "O Keśinī, go and find out who that charioteer is. My mind repeatedly tells me that he must be Nala; for when I look at him, I feel happy."

According to her orders she went to Bāhuka and said, "O noble man, welcome to you. Damayantī asks you when you started to come here."

Bāhuka replied, "The noble-souled king Ṛtuparṇa heard from a Brahmin that to-morrow there would be the Svayaṃvara of Damayantī. Therefore with the intention of coming here, he started yesterday having yoked to his chariot speedy horses. I am the charioteer of Ṛtuparṇa. I am sold to Ṛtuparṇa. I do not know where king Nala has gone. O fair one, Nala moves in disguise. Nala did abandon Damayantī; yet it is not proper that she should be angry with him." So saying he wept and tears flowed forth from his eyes like pearls strung together.

---

1. A little; 2. A desert; 3. Humble; 4. Evenly disposed; 5. Arrows; 6. Fire; 7. Whole.

Keśinī told all this news to Damayantī. When she heard it, her heart was agitated (with emotions). But it was overjoyed at the thought that he was Nala.

New Words:—ज्ञा; तुष्टिः; वारंवारम्; स्वागतम्; पुरुषश्रेष्ठ; प्रस्थित; भाविन्; प्रकल्प्य; ह्रस्; श्वस्; विक्रीत; प्रच्छन्न; कोपितुं नार्हेति; वि + लप्; ग्रन्थ्; क्षुभ्; भावना; तुष्.

HOME-WORK:—

I. Answer in Sanskrit:—

(1) किमर्थं भीमो घटोत्कचमनुगन्तुमैच्छत् ?

(2) किमायुधं गृहीतं भीमेन ?

(3) मायापाशेन बद्धोऽपि कथमात्मानं मोचितवान् भीमः ?

(4) कथं भीमो हिडिम्बाया घटोत्कचस्य च दैवतम् ?

(5) कः समयः कृत आसीत् भीमेन ?

II. Conjugate fully the following roots:—लू & अश्.

III. Change the voice of the following sentences:—

1. मातुराज्ञया गृहीतो ह्येषः ।
2. ब्राह्मण, गृह्यतां तव पुत्रः ।
3. यदि शक्तिरस्ति, बलात्कारेण मां नय ।
4. सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाहूयन्ते ।
5. कथमनेनापि न शक्यते हन्तुम् ?

# नवमः पाठः

## 'आः, ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः !'

राजा—तत्किमित्यनास्तीर्णे कठिनशिलातलमध्यास्ते देवी ? अध्यासितुं तव पर्याप्तमेव ममोरुयुग्मम् ।

( प्रविश्य सम्भ्रान्तः )

कञ्चुकी—देव, भग्नं भग्नम् !

राजा—केन ?

कञ्चुकी—भीमेन ।

राजा—कस्य ?

कञ्चुकी—भवतः ।

राजा—आः ! किं प्रलपसि ?

भानुमती—आर्य, किमनिष्टं मन्त्रयसे ?

राजा—धिक् प्रलापिन्, वृद्धापसद ! कोऽयमद्य ते व्यामोहः ?

कञ्चुकी—देव, न खलु कश्चिद्व्यामोहः । सत्यमेव ब्रवीमि । भग्नं भीमेन भवतो मरुता रथकेतनम् ।

राजा—बलवत्समीरणवेगाकम्पिते भुवने भग्नः स्यन्दनकेतुः । तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति ?

कञ्चुकी—देव, न किञ्चित् । किं तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति ।

राजा—ननु गच्छ । पुरोहितसुमित्राय निवेदय ।

कञ्चुकी—यदाज्ञापयति देवः । ( निष्क्रान्तः । )

प्रतीहारी—( प्रविश्य ) जयतु जयतु महाराजः ! महाराज, महादेवी खल्वेषा सिन्धुराजमाता दुःशला च प्रतीहारभूमौ तिष्ठति ।

राजा—( विचिन्त्यात्मगतम् ) किं जयद्रथमाता दुःशला चेति ! कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्नात्याहितमाचेष्टितं भवेत् । ( प्रकाशम् ) गच्छ । प्रवेशय शीघ्रम् ।

प्रतीहारी—यद्देव आज्ञापयति। ( निष्क्रान्ता। )

( ततः प्रविशति सम्भ्रान्ता जयद्रथमाता दुःशला च। )

( उभे सास्रं दुर्योधनस्य पादयोः पततः। )

माता—परित्रायतां परित्रायतां कुमारः।

( दुःशला रोदिति। )

राजा—( ससम्भ्रममुत्थाप्य ) अम्ब, समाश्वसिहि समाश्वसिहि। किमत्याहितम्? अपि कुशलं जयद्रथस्य?

माता—जात, कुतः कुशलम्?

राजा—कथमिव?

माता—अद्य खलु पुत्रवधामर्षितेन गाण्डीविनानस्तमिते सूर्ये तस्य वधः प्रतिज्ञातः।

राजा—इदं तदश्रुपातकारणमम्बाया दुःशलायाश्च! पुत्रशोकादुन्मत्तस्य किरीटिनः प्रलापैरेवमवस्था! अहो मुग्धत्वमबलानाम्! अम्ब, कृतं विषादेन। वत्से दुःशले, अलमश्रुपातेन। कुतश्चायं तस्य धनञ्जयस्य प्रभावो महाराजजयद्रथस्य विपत्तिमुत्पादयितुम्?

माता—जात, जात, ते हि पुत्रवधामर्षिता अनपेक्षितशरीरा वीराः परिक्रामन्ति।

राजा—( सोपहासम् ) एवमेतत्। सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम्।

माता—असमाप्तप्रतिज्ञाभारस्यात्मवधोऽस्य प्रतिज्ञातः।

राजा—यद्येवमलमानन्दस्थानेपि ते विषादेन। ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति। अन्यच्च मातः, का शक्तिरस्ति धनञ्जयस्यान्यस्य वा नामापि ग्रहीतुं ते तनयस्य?

भानुमती—आर्यपुत्र, यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभारः स्थानं खलु शङ्कायाः।

माता—साधु, कालोचितं भणितं भानुमत्या।

राजा—आः, ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः! कः कोऽत्र भोः। जैत्रं मे रथमुपकल्पय तावत्।

कञ्चुकी—( प्रविश्य ) देव, सज्जोऽयं रथस्ते ।

राजा—देवि, प्रविश त्वमभ्यन्तरमेव । यावदहमपि तस्य प्रगल्भ-पाण्डवस्याशस्त्रपूतं मरणमुपदिशामि ।

( निष्क्रान्ताः सर्वे । )

—वेणीसंहारम्

## VOCABULARY

**अत्याहितम्** (*n.*) A great calamity.

**अधि+आस्** [ 2. A. P. अध्यास्ते ] To occupy. [Used with the Accusative of a noun.]

**अनपेक्षितशरीर** ( *Adj.* ) One who does not care for the safety of one's body.

**अनस्तमित** ( *Adj.* ) Not set or gone down

**अनास्तीर्ण** ( *Adj.* ) Uncovered; bare.

**अनिमित्तम्** ( *n.* ) A bad omen.

**अभिमन्युवधामर्षित** ( *Adj.* ) Infuriated at the killing of Abhimanyu.

**अभ्यन्तरम्** ( *n.* ) A harem.

**अशस्त्रपूत** ( *Adj.* ) Not purified by the touch of a weapon.

**असमाप्तप्रतिज्ञाभार** ( *Adj.* ) One who has not fulfilled one's vow.

**उत्थाप्य** ( *Ger.* ) Having raised or lifted.

**उत्सन्न** ( *pp. pass.* ) Routed.

**उद्धत** ( *pp. pass.* ) Puffed up; haughty; impudent.

**ऊरुयुग्मम्** ( *n.* ) Pair of thighs.

**कच्चित्** ( *Indecl.* ) I hope.

**किरीटिन्** / **गाण्डीविन्** ( *m.* ) Names of Arjuna.

**गुरुकृतप्रतिज्ञाभार** ( *Adj.* ) One who has taken up the heavy burden of a vow.

**जैत्र** ( *Adj.* ) Victorious.

**पर्याप्त** ( *pp. pass.* ) Enough; sufficient.

**प्रगल्भ** ( *Adj.* ) Haughty.

**प्रतिज्ञात** ( *pp. pass.* ) Vowed.

**प्रतीहारभूमिः** ( *f.* ) The region about the gate.

**प्रलापिन्** ( *Adj.* ) A prattler.

**मुग्धत्वम्** ( *n.* ) 1. Foolishness. 2. Charm.

**रथकेतनम्** ( *n.* ) The banner of the chariot.

**वृद्धापसदः** ( *m.* ) A wretch of an old man.

**व्यामोहः** ( *m.* ) Infatuation.

शङ्कास्थानम् ( *n.* ) An object of suspicion or fear.
सज्ज ( *pp. pass.* ) Ready.
सम् + आ + श्वस् [ 2. P. P. समाश्वसिति ] To take heart.
स्यन्दनकेतुः ( *m.* ) The banner of the chariot.
सास्रम् ( *Indecl.* ) With tears in the eyes.
सोपहासम् ( *Indecl.* ) Jokingly.

GRAMMAR :—

## Conjugation of Verbs : Second Conjugation.

Some important roots of the *Second Conjugation* ending in आ—

ख्या [ P. P. ख्याति ] To tell.
दा [ P. P. दाति ] To cut.
पा [ P. P. पाति ] To protect.
भा [ P. P. भाति ] To shine.
या [ P. P. याति ] To go.
रा [ P. P. राति ] To give.
वा [ P. P. वाति ] To blow.
स्ना [ P. P. स्नाति ] To bathe.

Here are some more important roots of the *Second Conjugation* :—

अद् [ P. P. अत्ति ] To eat.
अधि+इ [ A. P. अधीते ] To study.
अन् [ P. P. अनिति ] To breathe.
आ+शास् [ A. P. आशास्ते ] To hope; to expect.
आस् [ A. P. आस्ते ] To sit down.
इ [ P. P. एति ] To go.
जक्ष् [ P. P. जक्षिति ] To eat.
ब्रू [ U. P. ब्रवीति, ब्रूते ] To speak.
रु [ P. P. रौति, रवीति ] To cry.
रुद् [ P. P. रोदिति ] To cry; to weep.
वस् [ A. P. वस्ते ] To put on; to wear.
विद् [ P. P. वेत्ति ] To know.
शी [ A. P. शेते ] To sleep; to lie down.
श्वस् [ P. P. श्वसिति ] To breathe.
सू [ A. P. सूते ] To give birth to.
स्तु [ U. P. स्तौति, स्तवीति; स्तुते, स्तुवीते ] To praise.
स्वप् [ P. P. स्वपिति ] To sleep.

*No sign* is added to the roots of the *Second Conjugation.* The terminations are directly applied to the roots. But almost all roots of the Second Conjugation excepting those ending in आ are irregular. Therefore instead of giving the complicated rules about the formation of the bases and the derivation of the forms, we have conjugated the roots fully. All roots of the Second Conjugation ending in आ are Parasmaipadin. These roots take हि in the Imperative Second Person singular as their termination and optionally substitute उस् in the Imperfect Third Person plural.

या Parasmaipadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| यामि | यावः | यामः | यानि | याव | याम |
| यासि | याथः | याथ | याहि | यातम् | यात |
| याति | यातः | यान्ति | यातु | याताम् | यान्तु |
| IMPERFECT | | | POTENTIAL | | |
| अयाम् | अयाव | अयाम | यायाम् | यायाव | यायाम |
| अयाः | अयातम् | अयात | यायाः | यायातम् | यायात |
| अयात् | अयाताम् | अयान्, अयुः | यायात् | यायाताम् | यायुः |

All roots of the Second Conjugation ending in आ are conjugated like या.

अद् Parasmaipadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| अद्मि | अद्वः | अद्मः | अदानि | अदाव | अदाम |
| अत्सि | अत्थः | अत्थ | अद्धि | अत्तम् | अत्त |
| अत्ति | अत्तः | अदन्ति | अत्तु | अत्ताम् | अदन्तु |
| IMPERFECT | | | POTENTIAL | | |
| आदम् | आद्व | आद्म | अद्याम् | अद्याव | अद्याम |
| आदः | आत्तम् | आत्त | अद्याः | अद्यातम् | अद्यात |
| आदत् | आत्ताम् | आदन् | अद्यात् | अद्याताम् | अद्युः |

## विद् Parasmaipadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| वेद्मि | विद्वः | विद्मः | वेदानि | वेदाव | वेदाम |
| वेत्सि | वित्थः | वित्थ | विद्धि | वित्तम् | वित्त |
| वेत्ति | वित्तः | विदन्ति | वेत्तु | वित्ताम् | विदन्तु |
| IMPERFECT | | | POTENTIAL | | |
| अवेदम् | अविद्व | अविद्म | विद्याम् | विद्याव | विद्याम |
| अवेः, अवेत्-द् | अवित्तम् | अवित्त | विद्याः | विद्यातम् | विद्यात |
| अवेत्-द् | अवित्ताम् | अविदुः | विद्यात् | विद्याताम् | विद्युः |

Besides these, the root विद् has optional forms in the Present and the Imperative. They are as follows :—

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| वेद | विद्व | विद्म | विदांकरवाणि | विदांकरवाव | विदांकरवाम |
| वेत्थ | विदथुः | विद | विदांकुरु | विदांकुरुतम् | विदांकुरुत |
| वेद | विदतुः | विदुः | विदांकरोतु | विदांकुरुताम् | विदांकुर्वन्तु |

## इ Parasmaipadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| एमि | इवः | इमः | अयानि | अयाव | अयाम |
| एषि | इथः | इथ | इहि | इतम् | इत |
| एति | इतः | यन्ति | एतु | इताम् | यन्तु |
| IMPERFECT | | | POTENTIAL | | |
| आयम् | ऐव | ऐम | इयाम् | इयाव | इयाम |
| ऐः | ऐतम् | ऐत | इयाः | इयातम् | इयात |
| ऐत् | ऐताम् | आयन् | इयात् | इयाताम् | इयुः |

## अधि + इ Ātmanepadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| अधीये | अधीवहे | अधीमहे | अध्ययै | अध्ययावहै | अध्ययामहै |
| अधीषे | अधीयाथे | अधीध्वे | अधीष्व | अधीयाथाम् | अधीध्वम् |
| अधीते | अधीयाते | अधीयते | अधीताम् | अधीयाताम् | अधीयताम् |
| IMPERFECT | | | POTENTIAL | | |
| अध्यैयि | अध्यैवहि | अध्यैमहि | अधीयीय | अधीयीवहि | अधीयीमहि |
| अध्यैथाः | अध्यैयाथाम् | अध्यैध्वम् | अधीयीथाः | अधीयीयाथाम् | अधीयीध्वम् |
| अध्यैत | अध्यैयाताम् | अध्यैयत | अधीयीत | अधीयीयाताम् | अधीयीरन् |

## शी Ātmanepadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| शये | शेवहे | शेमहे | शयै | शयावहै | शयामहै |
| शेषे | शयाथे | शेध्वे | शेष्व | शयाथाम् | शेध्वम् |
| शेते | शयाते | शेरते | शेताम् | शयाताम् | शेरताम् |
| IMPERFECT | | | POTENTIAL | | |
| अशयि | अशेवहि | अशेमहि | शयीय | शयीवहि | शयीमहि |
| अशेथाः | अशयाथाम् | अशेध्वम् | शयीथाः | शयीयाथाम् | शयीध्वम् |
| अशेत | अशयाताम् | अशेरत | शयीत | शयीयाताम् | शयीरन् |

## रुद् Parasmaipadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| रोदिमि | रुदिवः | रुदिमः | रोदानि | रोदाव | रोदाम |
| रोदिषि | रुदिथः | रुदिथ | रुदिहि | रुदितम् | रुदित |
| रोदिति | रुदितः | रुदन्ति | रोदितु | रुदिताम् | रुदन्तु |
| IMPERFECT | | | POTENTIAL | | |
| अरोदम् | अरुदिव | अरुदिम | रुद्याम् | रुद्याव | रुद्याम |
| अरोदीः—अरोदः | अरुदितम् | अरुदित | रुद्याः | रुद्यातम् | रुद्यात |
| अरोदीत्—अरोदत् | अरुदिताम् | अरुदन् | रुद्यात् | रुद्याताम् | रुद्युः |

The roots श्वस्, स्वप्, अन् and जक्ष् are conjugated like रुद्.

| | | | | | |
|---|---|---|---|---|---|
| E. g. श्वस् :— | PRESENT— | श्वसिमि | श्वसिवः | श्वसिमः | etc. |
| स्वप् :— | „ | स्वपिमि | स्वपिवः | स्वपिमः | „ |
| अन् :— | „ | अनिमि | अनिवः | अनिमः | „ |
| जक्ष् :— | „ | जक्षिमि | जक्षिवः | जक्षिमः | „ |

But the root जक्ष् alone has the following forms in the Third Person plurals. The rest of the forms are like those of रुद्. (See also next lesson.)

| | Present | Imperfect | Imperative | Potential |
|---|---|---|---|---|
| Third Person plural | जक्षति | अजक्षुः | जक्षतु | जक्ष्युः |

आस् Ātmanepadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| आसे | आस्वहे | आस्महे | आसै | आसावहै | आसामहै |
| आस्से | आसाथे | आध्वे | आस्स्व | आसाथाम् | आध्वम् |
| आस्ते | आसाते | आसते | आस्ताम् | आसाताम् | आसताम् |
| IMPERFECT | | | POTENTIAL | | |
| आसि | आस्वहि | आस्महि | आसीय | आसीवहि | आसीमहि |
| आस्थाः | आसाथाम् | आध्वम् | आसीथाः | आसीयाथाम् | आसीध्वम् |
| आस्त | आसाताम् | आसत | आसीत | आसीयाताम् | आसीरन् |

The roots वस् and आ+शास् (to hope) are conjugated like आस्. But the root शास् (to rule) is conjugated in a different way and will be dealt with in the next lesson. The Present Participle Active of the root आस् is आसीन (irregular).

### ब्रू Ubhayapadin.

| Parasmaipada | | PRESENT | Ātmanepada | | |
|---|---|---|---|---|---|
| ब्रवीमि | ब्रूवः | ब्रूमः | ब्रुवे | ब्रूवहे | ब्रूमहे |
| ब्रवीषि, आत्थ | ब्रूथः, आहथुः | ब्रूथ | ब्रूषे | ब्रुवाथे | ब्रूध्वे |
| ब्रवीति, आह | ब्रूतः, आहतुः | ब्रुवन्ति आहुः | ब्रूते | ब्रुवाते | ब्रुवते |

IMPERFECT

| | | | | | |
|---|---|---|---|---|---|
| अब्रवम् | अब्रूव | अब्रूम | अब्रुवि | अब्रूवहि | अब्रूमहि |
| अब्रवीः | अब्रूतम् | अब्रूत | अब्रूथाः | अब्रुवाथाम् | अब्रूध्वम् |
| अब्रवीत् | अब्रूताम् | अब्रुवन् | अब्रूत | अब्रुवाताम् | अब्रुवत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| ब्रवाणि | ब्रवाव | ब्रवाम | ब्रवै | ब्रवावहै | ब्रवामहै |
| ब्रूहि | ब्रूतम् | ब्रूत | ब्रूष्व | ब्रुवाथाम् | ब्रूध्वम् |
| ब्रवीतु | ब्रूताम् | ब्रुवन्तु | ब्रूताम् | ब्रुवाताम् | ब्रुवताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| ब्रूयाम् | ब्रूयाव | ब्रूयाम | ब्रुवीय | ब्रुवीवहि | ब्रुवीमहि |
| ब्रूयाः | ब्रूयातम् | ब्रूयात | ब्रुवीथाः | ब्रुवीयाथाम् | ब्रुवीध्वम् |
| ब्रूयात् | ब्रूयाताम् | ब्रूयुः | ब्रुवीत | ब्रुवीयाताम् | ब्रुवीरन् |

### सू Ātmanepadin.

| PRESENT | | | IMPERATIVE | | |
|---|---|---|---|---|---|
| सुवे | सूवहे | सूमहे | सुवै | सुवावहै | सुवामहै |
| सूषे | सुवाथे | सूध्वे | सूष्व | सुवाथाम् | सूध्वम् |
| सूते | सुवाते | सुवते | सूताम् | सुवाताम् | सुवताम् |
| IMPERFECT | | | POTENTIAL | | |
| असुवि | असूवहि | असूमहि | सुवीय | सुवीवहि | सुवीमहि |
| असूथाः | असुवाथाम् | असूध्वम् | सुवीथाः | सुवीयाथाम् | सुवीध्वम् |
| असूत | असुवाताम् | असुवत | सुवीत | सुवीयाताम् | सुवीरन् |

### स्तु Ubhayapadin.

PRESENT

| Parasmaipada | | | Ātmanepada | | |
|---|---|---|---|---|---|
| स्तौमि | स्तुवः | स्तुमः | स्तुवे | स्तुवहे | स्तुमहे |
| स्तौषि | स्तुथः | स्तुथ | स्तुषे | स्तुवाथे | स्तुध्वे |
| स्तौति | स्तुतः | स्तुवन्ति | स्तुते | स्तुवाते | स्तुवते |

IMPERFECT

| | | | | | |
|---|---|---|---|---|---|
| अस्तवम् | अस्तुव | अस्तुम | अस्तुवि | अस्तुवहि | अस्तुमहि |
| अस्तौः | अस्तुतम् | अस्तुत | अस्तुथाः | अस्तुवाथाम् | अस्तुध्वम् |
| अस्तौत् | अस्तुताम् | अस्तुवन् | अस्तुत | अस्तुवाताम् | अस्तुवत |

IMPERATIVE

| | | | | | |
|---|---|---|---|---|---|
| स्तवानि | स्तवाव | स्तवाम | स्तवै | स्तवावहै | स्तवामहै |
| स्तुहि | स्तुतम् | स्तुत | स्तुष्व | स्तुवाथाम् | स्तुध्वम् |
| स्तौतु | स्तुताम् | स्तुवन्तु | स्तुताम् | स्तुवाताम् | स्तुवताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| स्तुयाम् | स्तुयाव | स्तुयाम | स्तुवीय | स्तुवीवहि | स्तुवीमहि |
| स्तुयाः | स्तुयातम् | स्तुयात | स्तुवीथाः | स्तुवीयाथाम् | स्तुवीध्वम् |
| स्तुयात् | स्तुयाताम् | स्तुयुः | स्तुवीत | स्तुवीयाताम् | स्तुवीरन् |

This root has optional forms in all the four Tenses ( and Moods ) except in the Ātmanepada of the Potential.

### स्तु Ubhayapadin. ( Optional forms. )

PRESENT

| Parasmaipada | | | Ātmanepada | | |
|---|---|---|---|---|---|
| स्तवीमि | स्तुवीवः | स्तुवीमः | स्तुवे | स्तुवीवहे | स्तुवीमहे |
| स्तवीषि | स्तुवीथः | स्तुवीथ | स्तुवीषे | स्तुवाथे | स्तुवीध्वे |
| स्तवीति | स्तुवीतः | स्तुवन्ति | स्तुवीते | स्तुवाते | स्तुवते |

IMPERFECT

| | | | | | |
|---|---|---|---|---|---|
| अस्तवम् | अस्तुवीव | अस्तुवीम | अस्तुवि | अस्तुवीवहि | अस्तुवीमहि |
| अस्तवीः | अस्तुवीतम् | अस्तुवीत | अस्तुवीथाः | अस्तुवाथाम् | अस्तुवीध्वम् |
| अस्तवीत् | अस्तुवीताम् | अस्तुवन् | अस्तुवीत | अस्तुवाताम् | अस्तुवत |

| Parasmipada | IMPERATIVE | | Ātmanepada | | |
|---|---|---|---|---|---|
| स्तवानि | स्तवाव | स्तवाम | स्तवै | स्तवावहै | स्तवामहै |
| स्तुवीहि | स्तुवीतम् | स्तुवीत | स्तुवीष्व | स्तुवाथाम् | स्तुवीध्वम् |
| स्तवीतु | स्तुवीताम् | स्तुवन्तु | स्तुवीताम् | स्तुवाताम् | स्तुवताम् |

POTENTIAL

| | | | | | |
|---|---|---|---|---|---|
| स्तुवीयाम् | स्तुवीयाव | स्तुवीयाम | **स्तुवीय** | **स्तुवीवहि** | **स्तुवीमहि** |
| स्तुवीयाः | स्तुवीयातम् | स्तुवीयात | **स्तुवीथाः** | **स्तुवीयाथाम्** | **स्तुवीध्वम्** |
| स्तुवीयात् | स्तुवीयाताम् | स्तुवीयुः | **स्तुवीत** | **स्तुवीयाताम्** | **स्तुवीरन्** |

The forms given above in black type are not the optional forms, but they are the same as those given before. They have been repeated so that no incompleteness may be experienced in conjugating the root.

The root रु is conjugated like स्तु, but only in the Parasmaipada. It too has optional forms like स्तु.

LANGUAGE-STUDY :—

I. **कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्नात्याहितमाचेष्टितं भवेत्।**

Study carefully the use of **कच्चित्** in the above sentence. It expresses a pious wish or introduces an indirect question in a polite manner. It may be translated by the phrase, "*I hope.*" The above sentence may be translated as follows :—

Trans.:—I hope that the sons of Pāṇḍu, enraged at the death of Abhimanyu, have not brought about any untoward incident.

In the following instance **कच्चित्** introduces an indirect question.

**कच्चिदभिमतमास्वादितमभ्यन्तरे भवता।** (कादम्बरी)

Trans.:—I hope you could eat something after your own taste in the harem.

II. Study the following sentences with particular attention *to the style of the language* :—

1 कुतश्चायं धनञ्जयस्य प्रभावो जयद्रथस्य विपत्तिमुत्पादयितुम् ?

2 का शक्तिरस्ति धनञ्जयस्य नामापि ग्रहीतुं ते तनयस्य ?

3 आः, ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः !

4 यद्येवमलमानन्दस्थानेपि विषादेन ।

5 सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम् ।

6 स्वामिभक्तिर्मां मुखरयति ।

7 अहो मुग्धत्वमबलानाम् !

8 तस्य प्रगल्भपाण्डवस्याशस्त्रपूतं मरणमुपदिशामि ।

PECULIAR CONSTRUCTIONS :—

1 किमिति कठिनशिलातलमध्यास्ते देवी ?

2 धिक् प्रलापिन् वृद्धापसद !

ADDITIONAL EXERCISES :—

तदेवं गते कश्चित् कवितेव तनुमाश्रितः प्राप्तो विद्वान् । तं दृष्ट्वा सा विद्वत्परिषद्भयकौतुकयोः पात्रमासीत् । स च सर्वान् प्रणिपत्य प्राह —"कुत्र भोजनृपः" इति । ते तमाहुः —"इदानीमेव सौधान्तरगतः" इति । ततः कोऽपि राजपुरुषस्तद्विद्रस्स्वरूपं द्रागाज्ञे निवेदयामास । राजा च तं महापुरुषं मन्यमानः सभामभ्ययात् । स च "स्वस्ति" इत्याह राजानम् । राजा च तमालिङ्ग्य प्रणम्य निजकरकमलेन तस्करकमलमवलम्ब्य सौधान्तरं गत्वा प्रोत्तुङ्गगवाक्ष उपविष्टः प्राह—"विप्र, भवन्नाम्ना कान्यक्षराणि सौभाग्यावलम्बितानि । कस्य वा देशस्य भवद्विरहः सुजनान् बाधते" इति । ततः कविर्लिखति राज्ञो हस्ते "कालिदासः" इति । राजा वाचयित्वा पादयोः पतति ।

ततस्तत्रासीनयोरासीत् सन्ध्या । राजा "कवे, सन्ध्यां वर्णय" इत्याह ।

---

1. A palace; 2. At once; 3. A window situated at a high level.

कालिदासः—व्यसनिन इव विद्या क्षीयते पङ्कजश्री-
गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः।
कुनृपतिरिव लोकं पीडयत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः॥

पुनश्च राजानं स्तौति कविः—

"उपचारः कर्तव्यो यावदनुत्पन्नसौहृदा[1] पुरुषाः।
उत्पन्नसौहृदानामुपचारः कैतवं[2] भवति॥
सुकवेः शब्दसौभाग्यं सत्कविर्वेत्ति नापरः।
वन्ध्या[3] न हि विजानाति परां दौहृदसम्पदम्[4]॥" इति।

ततः क्रमेण भोजकालिदासयोः प्रीतिरजायत।

—भोजप्रबन्धः

HOME-WORK :—

I. Dissolve the compounds given below as indicated :—

(a) लज्जया सहितम् यथा स्यात् तथा—सलज्जम्। Similarly dissolve:—

सोपहासम्; सास्रम्; सविषादम्; ससम्भ्रमम्।

(b) स्यन्दनस्य केतुः – स्यन्दनकेतुः। Similarly dissolve :—

पाण्डुपुत्रः; सिन्धुराजमाता; अश्रुपातकारणम्; पुत्रशोकः; पुत्रवधः; शङ्कास्थानम्।

(c) न आस्तीर्णम् – अनास्तीर्णम्। Similarly dissolve :—

असमाप्तम्; अस्थानम्; अशस्त्रपूतम्; अनिष्टम्; अनस्तमितः; अनिमित्तम्।

II. Write grammatical notes on the words given below and use them in sentences of your own :—

अलम्; कृतम्; अपि; स्थानम्।

III. Show the difference in the meanings of कश्चित्, कच्चित्, and क्वचित्...क्वचित्. by using them in sentences of your own.

---

1. As long as friend-ship has not sprung up; 2. Hypocrisy; 3. A barren woman; 4. The desires of pregnancy.

# दशमः पाठः

## राज्ञो भोजस्यौदार्यम् ।

एकदा राजा धारानगरे विचरन् क्वचिच्छिवालये प्रसुप्तं पुरुषद्वयमपश्यत् । तयोरेको विगतनिद्रो वक्ति—'अहो, त्वं ममास्तरासन्न एव कस्त्वं प्रसुप्तोऽसि जागर्षि नो वा ।' ततस्त्वपर आह—'विप्र, प्रणतोऽस्मि । अहमपि ब्राह्मणपुत्रस्त्वामत्र प्रथमरात्रौ शयानं वीक्ष्य प्रदीप्ते प्रदीपे कमण्डलूपवीतादिभिर्ब्राह्मणं ज्ञात्वा भवदास्तरासन्न एवाहं प्रसुप्तः । इदानीं त्वद्वचनमाकर्ण्य प्रबुद्धोऽस्मि ।' प्रथमः प्राह—'वत्स, यदि त्वं प्रणतोऽसि ततो दीर्घायुर्भव । वद कुत आगम्यते, किं ते नाम, अत्र च किं कार्यम् ।' द्वितीयः प्राह—'विप्र, भास्कर इति मे नाम । पश्चिमसमुद्रतीरे प्रभासतीर्थसमीपे वसतिर्मम । तत्र भोजस्य वितरणं बहुभिर्वर्णितम् । ततो याचितुमहमागतः । त्वं मम वृद्धत्वात् पितृकल्पोऽसि । त्वमपि स्वपरिचयं वद ।' स आह—'वत्स, शाकल्य इति मे नाम, मयैकशिलानगर्या आगम्यते भोजं प्रति द्रविणाशया । वत्स, त्वयानुक्तमपि दुःखं त्वयि ज्ञायते । कीदृशं तद्वद ।' ततो भास्करः प्राह—'तात, किं ब्रवीमि दुःखम् ?

क्षुत्क्षामा शिशवः शवा इव भृशं मन्दाशया बान्धवा
लिप्ता झर्झरघर्घरी जतुलवैर्नो मां तथा बाधते ।
गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं
कुप्यन्ती प्रतिवेश्म लोकगृहिणी सूचिं यथा याचिता ॥'

राजा श्रुत्वा सर्वाभरणान्युत्तार्य तस्मै दत्वा प्राह—'भास्कर, सीदन्त्यतीव ते बालाः । झटिति देशं याहि ।' ततः शाकल्यः प्राह—

'अत्युद्धृता वसुमती दलितोऽरिवर्गः
क्रोडीकृता बलवता बलिराजलक्ष्मीः ।
एकत्र जन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत् पुरुषः पुराणः ॥'

ततो राजा शाकल्याय लक्षत्रयं दत्तवान् ।

—भोजप्रबन्धः

